॥ कालाग्निरुद्रोपनिषत् ३० ॥

ब्रह्मज्ञानोपायतया यद्विभूतिः प्रकीर्तिता ।
तमहं कालाग्निरुद्रं भजतां स्वात्मदं भजे ॥

ॐ सह नाववतु सह नौ भुनक्तु
सहवीर्यं करवावहै
तेजस्विनावधीतमस्तु
मा विद्विषावहै
ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ अथ कालाग्निरुद्रोपनिषदः
संवर्तकोऽग्निरृषिरनुष्टुप्छन्दः
श्रीकालाग्निरुद्रो देवता
श्रीकालाग्निरुद्रप्रीत्यर्थे
भस्मत्रिपुण्ड्रधारणे विनियोगः ॥

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ
अधीहि भगवंस्त्रिपुण्ड्रविधिं सतत्त्वं
किं द्रव्यं कियत्स्थानं कतिप्रमाणं का रेखा
के मन्त्राः का शक्तिः किं दैवतं
कः कर्ता किं फलमिति च ।
तं होवाच भगवान्कालाग्निरुद्रः
यद्द्रव्यं तदाग्नेयं भस्म
सद्योजातादिपञ्चब्रह्ममन्त्रैः
परिगृह्याग्निरिति भस्म वायुरिति भस्म जलमिति भस्म
स्थलमिति भस्म व्योमेति भस्मेत्यनेनाभिमन्त्र्य
मानस्तोक इति समुद्धृत्य
मा नो महान्तमिति जलेन संसृज्य
त्रियायुषमिति शिरोललाटवक्षःस्कन्धेषु
त्रियायुषैस्त्र्यम्बकैस्त्रिशक्तिभिस्तिर्यक्तिस्रो
रेखाः प्रकुर्वीत व्रतमेतच्छाम्भवं
सर्वेषु देवेषु वेदवादिभिरुक्तं
भवति तस्मात्तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय ॥

अथ सनत्कुमारः पप्रच्छ प्रमाणमस्य
त्रिपुण्ड्रधारणस्य त्रिधा रेखा
भवत्याललाटादाचक्षुषोरामूर्ध्नोराभ्रुवोर्मध्यतश्च
यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो

रजोभूर्लोकः स्वात्मा क्रियाशक्तिरृग्वेदः
प्रातःसवनं महेश्वरो देवतेति यास्य द्वितीया रेखा
सा दक्षिणाग्निरुकारः सत्वमन्तरिक्षमन्तरात्मा-
चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवनं
सदाशिवो देवतेति यास्य तृतीया रेखा साहवनीयो मकारस्तमो
द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं
महादेवो देवतेति एवं त्रिपुण्ड्रविधिं भस्मना करोति
यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा
स महापातकोपपातकेभ्यः पूतो भवति
स सर्वेषु तीर्थेषु स्नातो भवति
स सर्वान्वेदानधीतो भवति
स सर्वान्देवाञ्ज्ञातो भवति
स सततं सकलरुद्रमन्त्रजापी भवति
स सकलभोगान्भुङ्क्ते देहं त्यक्त्वा शिवसायुज्यमेति न
स पुनरावर्तते न स पुनरावर्तत
इत्याह भगवान्कालाग्निरुद्रः ॥

यस्त्वेतद्वाधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥ ३० ॥

ॐ सह नाववतु सह नौ भुनक्तु
सहवीर्यं करवावहै
तेजस्विनावधीतमस्तु
मा विद्विषावहै
ॐ शान्तिः शान्तिः शान्तिः ॥

इति कालाग्निरुद्रोपनिषत्समाप्ता ॥